द्वितीयस्थानपृच्छातत्रैव ॥ धनलाभस्यप्रश्नेलग्नेशेनेंदुनाथधननाथः ॥ कुरुतेयदीत्थशालंशुभयुतिदृग्यांभवेल्लाभः ॥ क्रूरग्रहैर्धनस्थैर्दूरे लाभोऽन्यदप्यशुभं ॥ क्रूरमुथशिलेधनेशेप्रष्टाम्रियतेथवाविलग्नेशे ॥ धनधनपेत्थशालेमंदगतिर्यत्रभावानाम् ॥ तनुधनसहजादीनांप्रष्टुस्त द्वारतोलाभः॥ प्रश्नदीपके ॥ लग्नस्थंचंद्रजंचंद्रःक्रूरोवायदिपश्यति॥धनलाभोभवत्याशुकिंत्वनर्थोपिपृच्छतः॥चंद्रलग्नधनाधीशादृष्टायुक्ताः परस्परम् ॥ धनकेंद्रत्रिकोणस्थाःसद्योलाभकराःस्मृताः ॥ शुभदस्वामिषड्वर्गेलग्नेसौम्ययुतेक्षिते ॥ प्रष्टुस्तात्कालिकीलब्धिरल ब्धिस्तुविपर्यये ॥ चतुर्थेसप्तमेचंद्रेखेरवौलग्नगेशुभे ॥ प्रष्टुःसद्योऽर्थलाभःस्याल्लग्नेवासुरमंत्रिणि ॥ अथतृतीयभावपृच्छा प्रश्न तंत्रे ॥ सहजपतिर्यदिसहजंपश्यतिचेत्तद्वयंशुभैर्दृष्टम् ॥ तद्भ्रातरोगतरुजःस्वस्थाःक्रूरेक्षणेवामं ॥ यदिसहजपातिःपृष्ठेतत्पतिनामुथ शिलेऽथतन्मांद्यम् ॥ षष्ठेशेसहजस्थेसहजपतौक्रूरितेवापि ॥ सूर्यस्यरश्मिसंस्थेभयावहंप्रष्टुरादेश्यम् ॥ षष्ठइत्युपलक्षणम् ॥ अष्टमस्थेपि ॥ षष्ठाष्टमभावेशौयद्भावेशेनेत्थशालिनौस्याताम् ॥ पीडांतस्यप्रवदेत्षष्ठाष्टमसंस्थगेवापि ॥ एवंसर्वेयथापित्रोस्तुर्येसुता नांच ॥ भृत्यचतुष्पदवर्गस्यास्ते स्त्रियाःसुहृदोये ॥ अथचतुर्थस्थानपृच्छा ॥ लग्नपतींदुचतुर्थेयदिमुथशिलमथवाग्रहेगमनं ॥ प्रष्टुःपृ थ्वलिभदमसौख्यदृग्योगतौनैव ॥ यदिपृच्छतिकृषिकोमेक्षेत्राल्लाभोभवेन्नवा ॥ लग्नंकृषिकस्तुर्यभूमिर्द्यूनंचकृषिस्तरुर्दशमम् ॥ लग्नेक्रूरो

ति॥३॥लग्नेशेंद्वोः सौम्येत्थशालतोरोगनाशनंवाच्यम्॥वक्रेतुतत्रखेटेभूयोपिगदः समुपयाति॥ ४ ॥भूमिस्थलग्नस्थद्यूनस्थशशीमुथशिलेभवे
न्मृत्युः॥लग्नस्थेरंध्रपतौलग्नपशशिनोर्विनाशेवा॥५॥लग्नाधिपेचसूर्येचंद्रःसप्तेशमुथशिलविधायी॥सप्तेशेषष्ठस्थेतन्मरणंरोगिणोवाच्यम्॥६॥
रंध्रेशेनाविनष्टेनास्तामितेनापिकेंद्रस्थे ॥ लग्नेशस्थमुथशिलेमृत्युःस्याद्रोगपृच्छायाम् ॥ ७ ॥ अथवातयोश्चकेंद्रेमुथशिलतःक्रूरपीडितेम
रणम् ॥ यदिकेंद्रेक्रूरग्रहस्तदापीडा॥अष्टमेषलग्नेशौचमुथशिलीनौतदामृत्युःस्यादि ॥तिवाचामित्यर्थः॥ सूर्यद्वादशभागंप्रविष्टेलग्नेश्वरेप्येव
म् ॥ ८ ॥ लग्नेचरेचरोगीक्षणेक्षणेस्यादरुक्सरुक्चापि ॥ द्विशरीरेपररोगःस्थिरेगदस्यैवरोगत्वम्॥शशिनोवक्रमुथशिलेस्थिररोगोमंदमुथ
शिलेपूर्वं ॥ मूत्रनिरोधाद्रोगोत्पत्तिर्ज्ञेयाकृतप्रश्ने॥१०॥ अथपृच्छायाःपूर्वेसप्ताहानिचविलोक्यचत्वारि ॥ यदितेषुशशांकरवीशुभयुतदृष्टौ
तदाशस्तम् ॥ ११ ॥ अथमंदोऽयमथनवेतिप्रश्नेलग्नेश्वरोऽथचंद्रोवा ॥ षष्ठेशमुथशिलीस्यात्तदस्तमितोवातदामंदः ॥ रोगवानित्य
र्थः ॥ अथस्वामिभृत्यचतुष्पादप्रकरणम् ॥ईशोऽन्योममभावितानवेतिलग्नेश्वरस्ययदिकेंद्रे॥ नोभवतिमुथशिलंषष्ठांत्यपतिभ्यांतदानान्यः
॥ १ ॥ वक्रीवान्येनसमंलग्नपतिःसहजनवमसंस्थेन ॥ कुरुतेयदीत्थशालंतदान्यनाथोभवेत्प्रष्टुः ॥ २ ॥लग्नपतौकेंद्रस्थेरिपुदृष्ट्याक्रूरवीक्षि
तेपुण्ये ॥ रविरश्मिगतेथभवेद्यावज्जविंचनान्यपातिः ॥ ३ ॥ अयमीशोभद्रोमेपृच्छायांलग्नपस्यकंबूले ॥ स्वामीसएवभव्योद्यूनेशस्यचशु

भोन्येशः ॥ ४ ॥ ग्रहभूमिस्थानानांचलग्नप्रश्नेपुरोक्तएवविधिः॥सम्यग्विचार्यवाच्यंशुभमशुभंपृच्छतःस्वधिया ॥९ ॥भृत्यचतुष्पदलाभं
प्रश्नेलग्नेशशीतगूषष्ठे ॥ षष्ठेशमुथशिलेवालग्नेषष्ठेश्वरोथतल्लाभः ॥ ६ ॥ भृत्यस्यवाहनस्यचयद्वाप्रश्नेचलग्नलग्नपती ॥ अर्थीदातासप्त
मसप्तमपौतद्वलात्प्राप्तिः॥ ७ ॥लग्नस्यचसप्तमेशेनमुथशिलेसप्तमस्यवालग्नेशेनमुथशिलेलग्नेशसप्तमेशयोर्वापरस्परंमुथशिलेभृत्यादिकस्यपृ
च्छकाभिलाषविषयस्यलाभइत्यर्थः ॥ अथसप्तमस्थानपृच्छास्त्रीलाभस्यप्रश्नेस्मराधिपेलग्नपेनशशिनावा॥कृतमुथशिलेयुवत्या अयाचि
तायाभवेल्लाभः ॥१॥ यदिलग्नपोविधुर्वाद्यूनेतदयाचितांस्त्रियंलभते ॥ लग्नेशान्भूसरिफेचंद्रेस्तपमुथशिलेस्वयंलाभः॥२॥ येनसमंमुथशिल
तत्रविनष्टेचपापयुतदृष्टे ॥ निकटीभूयतदाकिलविनश्यतिस्त्रीगतंकार्यं॥३॥ पापेत्ररंध्रनाथेस्त्रीजातेरेवविघटतेकार्यम् ॥ सहजपतौभ्रातृभ्य
स्तुर्येशेपितृव्यएवनान्येभ्यः ॥ ४ ॥ सौम्यकृतयुक्तिदृग्भ्यांपूर्वोक्तस्थानतःशुभंवाच्यं ॥९॥ अथस्त्रीस्नेहः ॥ प्रीतिस्थानप्रश्नेस्मरपतिलग्ने
शमुथशिलेस्नेहः ॥ झकटकदृशाझकटकः शशिकंबूलेतुसापिशुभा ॥ १ ॥ यदिमंदोलग्नेशःकेंद्रेचस्यात्तदाबलीप्रष्टा ॥ अस्तेश्वरेचमंदेकेंद्रे
प्रतिवादिनोऽस्तिबलम् ॥ २ ॥ उभयोरेकस्थितयोर्ज्ञातव्याझकटकंतयोःप्रीतिः ॥ सूर्येनशुभंविबलेनरस्यशुक्रेस्त्रियोद्वयोर्द्वितयौ ॥ ३ ॥
अथरुष्टागमनम् ॥ ममगृहिणीरुष्टापुनरेष्यतिनाथभूम्यधःस्थरवौ ॥ भूपरिगतेचशुक्रेनैतिपुनर्वक्रितेऽभ्येति ॥४॥ सूर्यान्निर्गतशुक्रेवक्रेपि

समेतिचान्यथारुष्टा ॥ क्षीणेंदौबहुदिवसैःपूर्णविधौचतद्रुमुपैति ॥ भूमिशब्देनचतुर्थस्थानं ॥ तस्मादधःपूर्वलग्नपर्यंतमितियावत् ॥ लग्न
मारभ्यचतुर्थपर्यंतंहिस्त्रीणांहर्षस्थानंनपुंसांरविश्वपुरुषग्रहस्तेनरुष्टायानागमनंएवंभुवश्चतुर्थादुपरिसप्तमपर्यंतंनराणांहर्षस्थानंनस्त्रीणां ॥शु
क्रस्यस्त्रीग्रहत्वान्नहर्षस्थानं ॥ इतिनरुष्टागमनमित्याशयः॥ अथकन्यापरीक्षा ॥ एषाकुमारिकाकिलनिर्दोषाकिन्नवेतिपृच्छायाम् ॥ लग्ने
स्थिरेस्थिरर्क्षेलग्नपशशिनोश्चनिर्दोषा ॥ १ ॥ चरराशिगतैरेतैरियंकुमार्यपिचजातदोषास्यात् ॥ द्विशरीरस्थेचंद्रेचरलग्नेस्वल्पदोषा
स्यात् ॥ २ ॥ शशिभौमावेकर्क्षेस्थिरवर्जेतत्परेणगुप्तमियम् ॥ रमिताशनिचंद्रमसोर्लग्नगयोःप्रकटमुपभुक्ता ॥ ३ ॥ यदिभौमशनिकेंद्रेवि
धुदृष्टोवृश्चिकेऽथशुक्रःस्यात् ॥ तद्रेष्काणेऽथतदानिभ्रांतंजातदोषैषा ॥ ४ ॥ अथस्वपरप्रसूतिपरीक्षा ॥ एषाकिलप्रसूतासितेघटेऽहह
रौचनोसूता ॥ अनयोरलिवृषगतयोःसूतानारीपरिज्ञेया ॥ १ ॥ सिंहस्थेबुधेशुक्रस्यकुंभगतत्वमसंभावितंतेनयोगद्वयमेतद्वैकल्पिकम् ॥
एवंवृषवृश्चिकगतत्वंव्याख्येयम् ॥ भौमबुधशुक्रचंद्राद्विशरीरेचापवर्जितेचेत्स्युः ॥ अग्रेऽस्तितत्प्रसूतिश्चापेनाग्रेनपृष्ठतः सूता ॥२॥ क्रूर
श्चेच्चरराशौपरतःसूतास्थिरेतुनिजपत्युः ॥ मिश्रेतुमिश्रमूत्यंजातकसंदेहपृच्छायाम् ॥ ३ ॥ पंचमेशलग्नेशयोरन्यःक्रूरस्ताभ्यांसहजमुथ
शिलीवाक्रूरस्ततइदंफलमादेश्यंतदेवाग्नेऽभिव्यनक्ति ॥ गुर्विण्येषास्वपत्युःपरपुरुषाद्वेतिलग्नसुतपत्योः॥ शुभयुतिदृग्भ्यांस्वपतेः शनिभौम

दृशाऽन्यतोगुर्वी ॥ ४ ॥ अथपातिव्रत्यपरीक्षा ॥ कुलटासतीग्रमथवेतिलग्नपतिश्चंद्रमाश्चभौमेन ॥ एकांशेमुथशिलकृतदैवभवनेभजत्य
न्यम् ॥ १ ॥ यदिगृहनिजगोभौमस्तदान्यदेशंप्रयातिजारकृते ॥ रविणेतिमुथशिलेसत्युपभुक्तातुराजपुरुषेण ॥ २ ॥ सौम्येनलेखकव
णिग्निजभेशुक्रेणयोषयैवस्त्री ॥ एतैर्योगैरसतीविपरीतेसुचरितेतिविज्ञेयम् ॥ ३ ॥ लग्नपतिनाथशशिनाम्रूसरिफेभूसुतेभवेज्जारः ॥ युक्तः
पुनर्गुरुदृशापुत्रभयाद्बविदृशाचराजभयात् ॥ ४ ॥ सितदृष्ट्यापरनारीभयात्सितज्ञैकराशिगतदृष्ट्या ॥ जारस्यस्थविरत्वालज्जित्वात्पतति
जारंसा ॥ ५ ॥ अथाष्टमस्थानपृच्छा॥नृपसंग्रामप्रश्नेविलग्नलग्नेशसंस्थितात्खेटात्॥ शशिम्रूसरिफात्प्रष्टास्तास्तपसस्थेंदुमुथशिलाच्छत्रुः
॥१॥तेषांचबलात्तयोर्बलमित्यर्थः ॥ अथवाशनिकुजजीवाःशीघ्रेभ्योबलयुताउपरिचराः॥ बुधसितचंद्रास्तेभ्यश्चदुर्बलाधश्चराश्चसंचिंत्याः॥
॥ २ ॥ मंदात्प्रष्टुर्ग्रहाःशन्यादयोयदिशीघ्रेभ्यःसितादिभ्योऽग्रेसराभवंति तदासितादिभ्यःशत्रुगेहेभ्यस्तेजोलब्ध्वाजयभाजोभवंतिप्रष्टारः॥
यदातुप्रश्नकालेशन्यादयोनाग्रेसरास्तदाशीघ्रेभ्यस्तेजोलब्धुमशक्ताः पराभूताभवंतीत्यर्थतःसिद्धम् ॥ लग्नपतावस्तपतेः षट्त्रिदृशाथमुथ
शिलेद्वयोःस्नेहः ॥ वर्गद्वयमध्याधःपतितःसोऽन्येनबध्यःस्यात् ॥३॥ वर्गद्वयाधिपानाम्रूसरिफेऽस्तंगतेनरणदैर्घ्यं ॥ लग्नस्वामिनिमंदेकंबू
लेउपरिगेजयःप्रष्टुः ॥ ४ ॥ एवंगुणेतुतस्मिन्विप्रविनष्टेस्तपतितनीचस्थे ॥ केंद्रेऽस्तेवास्तपतौप्रष्टुर्हानिःप्रवक्तव्या॥५ ॥लग्नादधः शुभे

 पगतेस्याच्चौरोपद्रवस्तुकृषिकर्तुः ॥ वक्रातिचारवर्ज्येक्रूरेचौरस्यकृषिलाभः ॥ लग्नस्थेशुभखेटेसाफल्यंकर्षकस्यकृषितःस्यात् ॥ तुर्ये 
चक्रूरगतेत्यक्त्वाभूमिंप्रयात्येषः ॥ द्यूनेचशुभोपगतेशुभंकृषेस्त्वन्यथातुविपरीतं ॥ दशमेदशमपतौवाशुभयुतदृष्टेशुभाद्वृक्षा॥ःभूभाटकपृच्छा
 यांलग्नंप्रष्टाचभाटकंद्यूने ॥ तस्योत्पत्तिर्दशमेतथावसानंचतुर्थेस्यात् ॥ लग्नस्यलग्नपस्यचशुभयोगेशुभमशोभनंवामे ॥ द्यूनेक्रूरोपगतेयस्मा 
दपिभाटकस्ततोऽनर्थः ॥ दशमेक्रूरोपगतेनोत्पत्तिर्बहुतराभवेत्प्रष्टुः ॥ क्रूरार्दितेतुतुर्येस्यादवसानेशुभंनास्य ॥ अथपंचमस्थानपृच्छा ॥
यदिपृच्छत्येतस्याःस्त्रियोभवेन्मेप्रजानवाकाश्चित् ॥ लग्नेशेंद्वोःसुतपतिनामुथशिलभावेप्रसूतिःस्यात् ॥ सुतपतिर्विलग्नेलग्नपचंद्रौसुते
थवास्याताम् ॥ सत्वरितमेववाच्यासविलंबंनक्तयोगेन ॥ द्विशरीरेचाविलग्नेशुभयुतपुत्रेद्व्यपत्ययोगोऽस्ति ॥ यदिलग्नपुत्रपतिपुंरा
शौतत्सुतोगर्भे ॥ अथचंद्रः ॥ पुंराशौपुंग्रहकृतमुथशिलयुतस्तदापिसुतः ॥ अथवाविधुरपराह्णेसूर्यास्पृष्टेतदास्त्रीस्यात् ॥ होरा
स्वामीपुरुषःपुंराशौचेत्तथापिसुतगर्भः ॥ चंद्रयुक्तेक्षितेगर्भेसौम्ययुक्तेक्षितेपिवा ॥ उच्चस्थेभ्युदितेतत्रपुण्यापत्यंप्रजायते ॥ पुण्यापत्यं
आयुष्मदपत्यम् ॥ एषागर्भवतीकिलनवाप्रमाणंप्रयातिगर्भोऽयम् ॥ प्रश्नेलग्नपशशिनोःसुतस्थयोर्गर्भवत्येव ॥ यद्येतयोर्मुथशिलंकेंद्रेसुत 
पेनगर्भिणीतदपि ॥ आपोक्लिमेत्थशालादनीक्षणाल्लग्नपुत्रयोर्नैवम् ॥ चरलग्नेक्रूरेंद्वोर्मुथशिलभावेविनश्यतिहिगर्भः ॥ लग्नपशशिनोस्तत्प

तिस्थवक्रिमुथशिलेपितथा ॥ जीवितमरणप्रश्नेबालानामंत्यपेशुभैर्दृष्टे ॥ केंद्रस्थेसितपक्षेशुभयुक्तेऽत्येविधौजीवित् ॥ क्रूरश्चेदंत्यपतिर्दग्ध
श्चापोक्लिमेऽयुतः ॥ क्रूरैस्तुजातमात्रोम्रियतेबालोऽथवागर्भे ॥ प्रसवज्ञानप्रश्नेभुक्तांल्लग्नांशकान्परित्यज्य ॥ भोग्याद्विचिंत्यशेषाननुमि
त्येवंवदेद्दिवसान्॥यावंतोनवमांशागतास्तावंतोगर्भस्यमासागताः॥यावंतोभोग्यास्तावद्भिरग्रतःप्रसवइतिव्याख्या॥अपरेतु॥मासज्ञानंशुक्रा
वस्थानादाहुः॥मासज्ञानस्यपृच्छायांगर्भिण्याभृगुनंदनः॥लग्नात्स्याद्यावतिस्थानेमासानाख्यातितावतः ॥ सुतात्संख्यातदावाच्याद्यदाध
र्मात्परंगतः॥इतिभुवनप्रदीपकोक्तेः॥लग्नांतर्दिनराशिर्दिवाग्रहोलग्नपश्चाद्दिनराशौ॥तद्दिवसेजन्मवाच्यंविपरीतेव्यत्ययश्चैषाम् ॥ अथरात्रिल
ग्नमहूर्तदधिपतिश्चेत्तुतस्यराशिपतेः ॥ बलमूह्यंदिनहोरापुंराशिस्त्रीग्रहेप्येवम्॥अस्मिन्वर्षेऽपत्यंभविताविलग्नपंचमाधीशौ॥भजतोयदीत्थ
शालंतत्रैवाब्देभवतिनूनम्॥यदिवामिथोग्रहगतौस्यातामेतौचसंततिस्तदापि॥वाच्यातस्मिन्वर्षेशुभयोगादन्यथानपुनः॥सूताप्रसूतयुवति
ज्ञानेसुतपोऽथषष्ठपःसूर्यात्॥निर्गत्योदयमायाततःप्रसूतेचनारीयम्॥अथजीवसौम्यशुक्राआकाशेउदयिनस्तथाप्येवम् ॥ अथषष्ठस्थानपृ
च्छा ॥ रोगादयमुत्थास्यतिनवेतिलग्नंभिषक्चूनं ॥ व्याधिर्दशमंरोगीहिबुकंभेषजमिहाहुराचार्याः ॥ १ ॥क्रूरार्दितेविलग्नेवैद्यान्नगुणस्तदो
षधाद्रोगः॥वृद्धिमुपयातिदशमेक्रूरैर्निजबुद्धितोप्यगुणः॥२॥अस्तेचक्रूरयुतेमांद्यान्मांद्यंतथौषधाद्दंधौ ॥सौम्योपगतैरेतैरोगतारोगिणोभव

सतिऽपरिचमंदेशुभःसहायःस्यात् ॥ लग्नपतारंध्रस्थेरंध्रपमुथशिलेमतिःप्रष्टुः ॥ ६ ॥ सप्तेशेधनसंस्थेधनेशकृतमुथशिलेरिपोर्नाशः ॥ लग्ने
शदशमपत्योर्मुथशिलतःपृच्छकस्यजयवीर्यें ॥ ७ ॥ तुर्यास्तपयोरेवंशत्रोर्योगेजयोज्ञेयः ॥ उभयवर्गेपिकेंद्रेतत्पतिकृतमुथशिलेबलंज्ञेयम्
॥ ८ ॥ बलवान्मुथशिलंयत्रवर्गेतस्यवर्गस्यजयइत्यर्थः ॥ चरराशौसबलत्वंजित्वाप्रांतेविनाशस्तु ॥ लग्नपतावंत्यस्थेप्रष्टानश्यतिपरोऽस्त
पेषष्ठे ॥ ९ ॥ खपतौलग्नेप्रष्टुस्तुर्येशेऽस्तेरिपोःसहायबलम् ॥ यन्मुथशिलैरवींद्रूतस्यबलंमूसरिफेहानिः ॥ १० ॥ अथनवमस्थानपृच्छा
॥ ममगमनंभविताकिंनवेतिलग्नेश्वरेनवाकेंद्रे ॥ नवमेशमुथशिलेसतिनवमेशेवाभवेद्गमनं ॥१ ॥ लग्नस्थेनवमपतौलग्नाधिपमुथशिलेचसंचारा
त् ॥ रहितोयातिपुनर्नोनवमदृशावर्जितेयोगे ॥ २ ॥ लग्नपतौकेंद्रस्थेसहजग्रहमुथशिलेचाविक्रूरे ॥ गमनंस्यादस्मिन्वाकेंद्रेक्रूरेचनास्ति
गतिः ॥ ३ ॥ अस्तेक्रूरेचयत्कार्येनिर्यातिनिघ्नमतएव ॥ आकाशस्थेपापेराजकुलाज्ज्येष्ठतोनिजाद्वापि ॥ ४ ॥ नवमेशेमुथशिलगेलग्ना
धीशेनपापरिपुदृष्टे ॥ गमनेवसानतःस्यात्प्रष्टुःकष्टंक्षयोऽर्थस्य ॥५॥ लग्नेशेनवमेशेमुथशिलकृतिरंध्रसप्तमेकष्टम् ॥ उदयेस्मिन्यायाद्विनिः ॥ १०७॥
सृतिःस्यात्सुखकरःपंथाः ॥ ६ ॥ लग्नान्मार्गानुभवोव्योम्नःकार्यस्मराद्गतिस्थानम् ॥ भूमेःकार्यपरिणतिरेवंलग्नेशरीरसुखम्॥ ७ ॥ दशमे
शुभेचासिद्धिःकार्यस्यास्तेप्रयातियत्स्थाने ॥ तत्रशुभंचचतुर्थेपरिणामःसुंदरःकार्ये ॥ ८ ॥ लग्नेशंशशिनंवायःक्रूरस्तुदतितत्रमनुजर्क्षे ॥ म

नुजात्रिराशिकेवातदाभयंद्विपदतोगंतुः ॥ ९ ॥ जलराशौवारिभयंचतुष्पदर्क्षेतथाश्वादेः ॥ घटचापेद्रुमकंटकभयंहरौव्याघ्रसिंहादेः ॥ १०॥
नमरप्रवेशतोऽस्मान्फलमस्तिनवाप्रवेशलग्नमिह ॥ तस्मिन्धनपेवक्रेनोरहणंकार्यसिद्धिर्वा ॥ ११ ॥ रहणंस्थितिरित्यर्थः ॥ अतिचरिते
बहुदिवसंरहणंनोकार्यसिद्धिरीषदापि ॥ नवमतृतीयगेस्मिन्कार्यंकृत्वाशुनिजपुरंयाति ॥ १२ ॥ लग्नेकर्मण्यायेधनपयुतेशोभनंज्ञेयम् ॥ स
क्रूरसप्तमस्थेपथिविघ्नान्ज्ञकटकश्चतुर्थस्थे ॥ १३ ॥ अथदशमस्थानपृच्छा॥राज्याप्तिप्रश्नलग्नेलग्नेशेशशिनिवानभःपतिना॥कृतमुथशिलेंब
रदृशाराज्यंरूपक्रमाद्भवति ॥ १ ॥ स्वकुलोचितंराज्यंभवतीत्यर्थः ॥अन्योन्यभवनगमनाक्रूराभावेऽर्थाचिंतितप्राप्तिः।।लग्नस्थेनान्येनचसौ
म्येनांबरस्यमुथशिलेप्येवम् ॥२॥ पापार्दितेतुमंदोनिकटीभूयोत्तरत्यधोराज्यं ॥ मंदगामीयोग्रहोत्राधिकारीतस्मिन्पापयुतेराज्यनाशइतिता
त्पर्यं॥ भूमिस्थेक्रूरदृशात्वपवादःशुभदृशाकीर्तिः॥ ३ ॥ मंदग्रहेबलवतिक्रूरवियुक्तेयदाशशीविबलः॥ मंदेबलेनभ्रमणात्राज्यप्राप्तिर्भवेत्प्रष्टुः
॥ ४ ॥ लग्नाधिपतौस्वगृहेलाभोराज्यस्यतुंगगेभौमे ॥ लग्नांबराधिपौयदिकंबूलौकेंद्रगेंदुमुथशिलतः ॥ ५ ॥ उत्तमराज्यावाप्तिःस्वर्क्ष
स्थेचेंदुतोविपुला ॥ यत्रर्क्षेलग्नेशस्तत्पतिरशुभेगृहेतदाकार्यम् ॥ ६ ॥ नस्यादस्तेकष्टाद्दशमदृशाकटुकताकार्ये॥राज्यप्राप्तौसत्यांयदिष्ट
च्छतिकोपिपरिणतिंचतदा ॥७॥ लग्नंशरीरकार्यंगृहकर्मास्तंनभश्चराज्यार्थं॥ लाभोमित्रस्यार्थेचतुर्थकंकर्मणोवसितयेच॥८ ॥ द्रव्यंधनाय

ता० नी० सहजंभृत्येभ्योरिपुश्चवैरिभ्यः ॥ एतैःशुभैःशुभंस्यादशुभैर्वामंचसर्वकार्याणाम् ॥९॥ वित्तस्वामिनिभौमेनौचित्येपारदारिकेव्ययकृत् ॥ जीवेध
र्मायरिपौगुरुपूजायैसितेविलासाय ॥ १० ॥ वाणिज्यायज्ञेपुनरिंदौमुथशिलिनिचान्यथान्यार्थम् ॥ लग्नपतौपतितस्थेविबलेराज्यात्यय प्र०
॥१०८॥ स्तुकंबूले ॥ ११ ॥ कोपिगुणःस्यात्पापाक्रांतैरशुभंच्युतोभवति ॥ नरपतिसचिवस्नेहप्रश्नेकंबूलेलग्नसप्तपयोः ॥ १२ ॥ मुथशिलयोःशुभ
दृष्ट्याशुभताराज्येमिथःस्नेहः ॥ राज्यंचरंस्थिरंवालग्नपमगनेशयोःसहयोः ॥ १३ ॥ यद्येकोमंदःस्यात्केंद्रेतात्स्थितमथोन्यथावाच्यम् ॥ य ३
दिवासवाममार्गेभूमौवाप्रच्युतिर्भवेत्पूर्वम् ॥१४॥ कंबूलेसतिलभतेशीघ्रंमुसरिफेतुनपुनः ॥ १५ ॥ अथैकादशस्थानपृच्छा ॥ नृपतेर्गौरव
लाभाशादिममस्यान्नवेतिचप्रश्ने ॥ आयेशलग्नपत्योःस्नेहदृशामुथशिलेद्रुतंभवति ॥ १ ॥ रिपुदृष्ट्याबहुदिवसैःकेंद्रेचायेशचंद्रकंबूले ॥ वा
च्यापूर्णवाशाचरस्थिरद्विभावगेस्वनामफलं ॥ २ ॥ मंदेक्रूरोपहतेभूत्वाशाशुप्रणाशमुपयाति ॥ क्रूरायुक्तेशुभयुज्यधिकारवशेनलभ्याशा
॥३॥ मित्रेणसहप्रीतिर्भवितालग्नेश्वरायपत्योश्च ॥ प्रियदृष्ट्यामुथशिलतःप्रीतिर्वान्योन्यगृहयानात् ॥४॥ केंद्रेस्थितयोरनयोर्मैत्रीकिलपूर्वजा
तैव ॥ पणफरगतौपुरस्तादापोक्लिमतोमहाप्रीतिः ॥५॥ गुप्तंकार्यमिदंमेसिध्यतिलग्नेश्वरेऽथचंद्रमसि ॥ शुभमुथशिलगेकेंद्रेतन्निकटेवाथसि ॥ १०८ ॥
द्धिःस्यात्॥६॥अथद्वादशस्थानपृच्छा॥रिपुविग्रहपृच्छायांबलवतिषष्ठेरिपुःसबलः॥द्वादशपेशुभदृष्टेबलवतिवाच्यंबलंप्रष्टुः॥१॥ रिपुविग्रह

पृच्छायांनामोच्चारोरिपोर्बलिन्यस्ते ॥ गुर्तेचद्वादशपेबलवतिवाच्यंबलंप्रष्टुः॥२॥ शुभयुतदृष्टेसद्व्ययमशुभेक्षणयोगतोव्ययमनर्थात्॥एवंभावे
ष्वखिलेषूह्यंसदसत्फलंसुधिया ॥ ३ ॥ इतिसंक्षेपतोद्वादशभावप्रश्ननिरूपणम् ॥ अथकेचिद्विशेषतःप्रश्नाः॥ तत्रादौपाथिकागमनम् ॥
ताजिकेसमरसिंहे ॥ आगमनेपृच्छायांलग्नेशेलग्नमध्यसंस्थेन ॥ कृतमुथशिलेसमेतिहिसुखमस्ततुरीयगेकष्टात्॥१॥स्थानाच्चलितःप्रश्नेलग्न
पतौसहजनवमगृहसंस्थे ॥ लग्नस्थेनमुथशिलेपंथानंवहतिपाथिकोऽयं ॥ २ ॥ रंध्रेथधनेतस्मिन्नाकाशसंस्थेनमुथाशिलेप्येवं ॥ केंद्रस्थिते
त्थशालेलग्नेक्षणवर्ज्यमेतिनकदापि ॥ ३ ॥ लग्नाधिपतौवक्रेलग्नंपश्यत्यमुत्रचंद्रेवा ॥ वक्रगमुथशिलेसतिसमेतिपाथिकःसुखंशीघ्रं॥ ४॥अंत्य
स्थितलग्नपतौशशिनाकृतमुथशिलेद्रुतमुपैति ॥ लग्नाद्वापिचतुर्थाच्छुभाद्द्वितीयतृतीयगावापि ॥ ५ ॥ कथयंतिनष्टलाभंप्रवासिनश्चागमं
त्वरितम् ॥ चिंतामणौ ॥ ग्रहःषष्ठेऽथजामित्रेवाक्पतिःकंटकेस्थितः ॥ पथिकागमनंब्रूतेसितेज्ञेवात्रिकोणगे ॥ ६ ॥ षष्ठोदयेपापदृष्टेशुभदृ
ग्वर्जितेबुधः ॥ लग्नात्षष्ठेयदापापायातुश्चनिधनंवदेत् ॥ ७ ॥ यदाक्रूरास्तृतीयस्थादेशाद्देशांतरंगतः ॥ चौरेणैवहृतस्वश्चपथिकःकेंद्रमायदि
॥ ८ ॥ पापैःषष्ठत्रिलाभस्थैःकंटकस्थैःशुभग्रहैः ॥ प्रवासीसुखमायातिदूरस्थोपिसुनिश्चितम् ॥ ९ ॥ चतुरस्रैत्रिकोणेवापापगेहस्थितःश
निः ॥ पापदृष्टश्चनियतंबंधनंयातुरादिशेत् ॥ १० ॥ शुभयुक्तेस्थिरेलग्नेस्थिरोबंधश्चरेऽन्यथा॥ द्वितनौसौम्यसंयुक्तेबंधमोक्षौक्रमेणतु॥ ११॥

पापास्त्रिकोणजामित्रेविलग्नेषष्ठकोदये ॥ शत्रुभिर्वीक्ष्यमाणाश्चयातुःकष्टंवदेत्सुधीः ॥ १२ ॥ मार्गस्थानगतैः सौम्यैर्मार्गेतस्यशुभंवदेत् ॥ क्रूरैर्दुःखंविलग्नस्थैःपापैः क्लेशमवाप्नुयात् ॥ १३ ॥ चरलग्नेचरांशेवाचतुर्थेचंद्रमाःस्थितः ॥प्रवासीसुखमायातिकृतकार्यश्चवेश्मनि ॥१४॥ कंटकैःसौम्यसंयुक्तैःपापग्रहविवर्जितैः ॥ प्रवासीसुखमायातिनिधनस्थेसुधाकरे ॥ १५ ॥ गमागमौतुनस्यातांयोगेदुरुधराकृते॥ शुभैःशुभ कृतोरोधःपापैस्तस्करतोभयम् ॥ १६ ॥ गमागमौहिनस्यातांस्थिरराशौविलग्नगे ॥ नरोगोपशमोनाशोद्रव्याणांनपराभवः १७॥ वि परीतंचरेवाच्यंफलंमिश्रंद्विमूर्तिषु ॥ स्थिरवत्प्रथमेखंडेपरार्धेचरराशिवत् ॥ १८ ॥ प्रवासीशीघ्रमायातिगुरुशुक्रौनिवित्तगौ ॥ चतुर्थ स्थानगावेतौशीघ्रमायातिकार्यकृत् ॥ १९ ॥ इंदुःसप्तमगोलग्नात्पथिकंवक्तिमार्गगम् ॥ मार्गाधिपश्चराश्यर्द्धात्परभागेव्यवस्थितः॥२०॥ शुक्रार्कजीवसौम्यानामेकोपिस्याद्धरायगः ॥ तदाशुगमनंब्रूयात्प्रष्टुर्नगमनंव्यये ॥ २१ ॥ लग्नाद्यावत्तिथेस्थानेबलीखेटोव्यवस्थितः ॥ ब्रूयात्तावत्तिथेमासेपथिकस्यानिवर्तनम् ॥ २२ एवंकालंचरांशस्थेद्विगुणंचास्थिरांशके ॥ द्विस्वभावांशगेखेटेत्रिगुणंचिंतयेत्सुधीः ॥ २३ ॥ यातुर्विलग्नाज्जामित्रभवनाधिपतिर्यदा ॥ करोतिवक्रमावृत्तेःकालंतुग्रुवतेपरे ॥ २४ ॥ चतुर्थेदशमेवापियदिसौम्यग्रहोभवेत् ॥ तदा नगमनंक्रूरैस्तत्रस्थैर्गमनंभवेत् ॥ २५ ॥ लग्नाद्वालग्ननाथाद्वायत्संख्याःक्रूरखेचराः ॥ नवमेद्वादशेवापितत्संख्याःस्युरुपद्रवाः॥ २६ ॥

लग्नाद्वालग्ननाथाद्वायावंतःसौम्यखेचराः ॥ मार्गेतत्रोदयावाच्याःस्थानेस्थानेविचक्षणैः ॥ २७ ॥ क्रूरयुक्तोक्षितोमंदःशुभदृग्योगवर्जितः॥
धर्मस्थस्तनुतेव्याधिंप्रोषितस्याष्टगोमृतिम् ॥ २८ ॥ जामित्रस्यशुभोत्थेयातानायातिदुरुधरायोगे ॥ मित्रस्वामिनिषेधात्पापोत्थेशत्रु
रुक्चौरात ॥ २९ ॥ चंद्रार्कयोश्छिद्रगयोर्यमेनसंदृष्टयोःस्यात्परशस्त्रभीतिः ॥ रंध्रेसितेज्ञेचसुखाप्तिरारेमंदेभयंपापयुगीक्षितेऽध्व
नि ॥ ३० ॥ अथदूरस्थोजीवतिमृतोथवेत्थंयदाप्रश्नः ॥३१॥ लग्नेश्वरेशीतकरेऽथषष्ठेतुर्येऽष्टमेवाप्यतिनीचगेवा ॥ अस्तंगतेछिद्रपती
त्थशालयुक्तेशुभैर्दूरगतोमृतःस्यात् ॥ ३२ ॥ भूमेरधःस्थेनवचक्रगेणयदीत्थशालंकुरुतेशशांकः ॥ सौम्यैरदृष्टेमरणंप्रकुर्याद्दूरास्थितस्या
पिविदेशगस्य ॥ ३३ ॥ सौम्यैःषष्ठांत्यरंध्रस्थैर्विबलैश्वशुभेक्षितैः ॥ पापयुक्तोशशांकाःकौतदादूरास्थितोमृतः ॥ ३४ ॥ पृष्ठोदयेपापयुते
त्रिकोणकेंद्राष्टषष्ठोपगतैश्वपापैः ॥ सौम्यैरदृष्टैःपरदेशसंस्थोमृतोगदार्तोनवमेचसूर्ये ॥ ३५ ॥ तुर्योपरिस्थेनखगेनचंद्रमायदीत्थशालंकुरु
तेशुभेक्षितः ॥ सौम्यैर्युतोवापरदेशसांस्थितःसुखीचजीवेत्पथिसौख्यमेति ॥ ३६ ॥ अथपरचक्रागमनपृच्छा ॥ षट्पंचाशिकायाम् ॥ मा
र्गान्निवर्ततेशत्रुःपापैःशत्रुग्रहाश्रितैः ॥ चतुर्थगैरपिप्राप्तःशत्रुर्भग्नोनिवर्तते ॥३७॥ झषालिकुंभकर्कटारसातलेयदास्थिताः ॥ रिपोःपराजय
स्तदाचतुष्पदैःपलायनम् ॥ ३८ ॥ मेषधनुःसिंहवृषायद्युदयस्थाभवंतिहिबुकेवा ॥ शत्रुर्निवर्ततेतदाग्रहसहितावावियुक्तावा ॥ ३९ ॥

ता॰ नी॰ नागच्छतिपरचक्रंयदार्कचंद्रौचतुर्थभवनस्थौ ॥ गुरुबुधशुक्राहिबुकेयदातदाशीघ्रमायाति ॥ ४० ॥ स्थिरोदयेजीवशनैश्चरेस्थितेगमागमौ प्र॰
नैववदेत्तुपृच्छतः ॥ त्रिपंचषष्ठारिपुसंगमायपापाश्चतुर्थाविनिवर्तनाय ॥ ४१ ॥ दशमोदयसप्तमगाःसौम्यानगराधिपस्यविजयकराः ॥
॥११० ॥ आरार्किज्ञगुरुसिताःप्रभंगदौविजयदानवमे ॥ ४२ ॥ नवमेभौमशनीभंगदौ बुधगुरुशुक्राविजयदाइत्यर्थः ॥ उदयर्क्षाच्चंद्रर्क्षंभवतिचयाव ३
द्दिनैश्चतावद्भिः॥आगमनंस्याच्छत्रोर्यदिनमध्येग्रहःकश्चित् ॥४३॥ अन्यत्रापिप्रश्नप्रदीपे ॥ दैत्येज्यवाचस्पतिसोमपुत्रैरेकर्क्षगैर्लग्नगतैर्बला
ढ्यैः ॥ द्वाभ्यामथेज्येभृगुजेऽथलग्नेहन्याद्रणेयायिनृपंपुरेशः ॥ ४४ ॥ सूर्यैंदुभौमार्कजसैंहिकेयैःसर्वैश्चतुर्भिस्त्रिभिरेवलग्नगैः ॥ हन्यात्तदा
स्थायिनमाशुयायीद्यूनस्थितैर्यायिनृपंपुरेशः ॥ ४५ ॥ शुक्रेज्यशीतांशुबुधाःसुरेज्यैःसर्वैस्त्रिभिर्यूनगतैर्बलाढ्यैः॥ हन्याद्रणेस्थायिनमाशुया
यीसुखास्पदस्थैश्चशुभैःसुसंधिः ॥ ४६ ॥ कुजेत्थशालेहिमगौविलग्नेबंधोऽथमृत्युर्युधिनागरस्य ॥ भौमेत्थशालेचविधौकलत्रेबंधंमृतिंवालभते
ऽत्रयायी ॥ ४७ ॥ लग्नेशजामित्रपयोश्चमध्येभवेद्ग्रहोयःस्वगृहोच्चसंस्थः ॥ तद्वर्गमर्त्यानृपयोश्चसंधिर्ज्ञेयोबुधैर्लेखकपंडिताभ्यां ॥ ४८ ॥

| सू. चं. | मं. | बु. | बृ. शु. | श. |
|---|---|---|---|---|
| राजानौ | सेनापतिः | युवराजः | मंत्रिणौ. | दासः |

राजानौरविशीतगूइत्यादिवर्गः ॥ क्रूरेकलत्रेह्युदयेशुभग्रहोयच्छेद्धनंयायिनृपायनागरः॥ विपर्ययाद्यायि ॥११०॥
नृपःपुरेश्वरंदुर्गाद्धिनिष्काश्यददातिवास्पदम्॥ ४९॥ रवीत्थशालेशशिजेसुगुप्ताश्चराभवेयुश्चकुजेसराफा

त ॥ ग्रहाच्छशांकेनयुतश्चतस्मिन्येयेन्यवेषाश्चभवंतिचाराः ॥ ९० ॥ चिंतामणौदुर्गप्रश्नः ॥ प्रश्नेविलग्नेक्रूरेवादुर्गभंगोनजायते ॥ विशेष
तोभूमिपुत्रेराहौवामूर्त्तिगेसति ॥ ९१ ॥ सप्तमेसिंहिकासूनौदुर्गंशीघ्रेणलभ्यते ॥ जामित्रोदयगेक्रूरेरिःफगेलग्ननायके ॥ ९२ ॥ द्वितीये
वाष्टमेषष्ठेतदादुर्गंनलभ्यते ॥ सक्रूरोलग्नपोवक्रीयुद्धदःकेंद्रसंस्थितः ॥ ९३ ॥ षष्ठाधिपेद्यूनगतेपापेवायुद्धमादिशेत् ॥ पृच्छायांकेंद्र
गैःक्रूरैःकोटेदुर्गेवधोनृणाम् ॥ ९४ ॥भौमाष्टमेशावेकत्रतदातिनिधनंनृणाम् ॥ स्वायपुत्रस्थितेजीवेकोटमध्येभयंनहि ॥ ९५ ॥ शनौभौमे
चकेंद्रस्थेबहूनांवधबंधनम् ॥ लग्नतोयदिपापःपापेनयुतेक्षितोवास्यात् ॥ लग्नात्पूर्वापरगौपापोयुद्धंतदाघोरम् ॥ ९६ ॥ अथरोगिणः
शुभाशुभम् ॥ विलग्नेषष्ठपःपापोजन्मराशिनिरीक्षिते ॥ रोगिणस्तस्यमरणंनिश्चयेनवदेद्बुधः ॥९७॥ चतुर्थाष्टमगेचंद्रेपापमध्यगतेपिवा ॥
मृतिःस्याद्बलसंयुक्तसौम्यदृष्ट्याचिरात्सुखं ॥ ९८ ॥ विधौलग्नेस्मरेभानौरोगीयातियमालयम् ॥ प्रश्नेक्रूरग्रहेलग्नेरोगवृद्धिश्चिकि
त्सकात् ॥ ९९ ॥ तथालग्नगतेसौम्येवैद्योक्तममृतंवचः ॥ लग्नेवैद्योद्युनेव्याधिःखंरोगीतुर्यमौषधम् ॥ ६० ॥ रोगिणोभिषजोमैत्रीमैत्रीभिष
जरोगयोः ॥ व्याधेरुपशमोवाच्यःप्रकोपःशात्रवेत्रयोः ॥ ६१ ॥ लग्ननाथेचसबलेकेंद्रसंस्थेशुभग्रहे ॥ उच्चगेवात्रिकोणेवारोगीजीवतिनिश्चय
म् ॥ ६२ ॥ एकःशुभोबलीलग्नेत्रायतेरोगपीडितं ॥ सौम्याधर्मारिलाभस्थास्त्रितीयस्थागदापहाः ॥ ६३ ॥ अथदेवदोषज्ञानम् ॥ वन्ह्यं

ता० नी० कद्रादशेषष्ठेलग्नात्पापग्रहोयादि॥हतोगदैर्जलैश्शस्त्रैस्तस्यदोषःकुलोद्भवः ॥६४॥ प्रेताश्चराहौपितरःसुरेज्येचंद्रेबुदेव्यस्तपनेपिदेव्यः॥स्वगो प्र०
त्रदेव्यश्चशनौबुधेचभूतानिविंद्याद्व्ययरंध्रसंस्थे ॥ ६५ ॥ शाकिन्यआरेभृगुजेंबुदेव्योगृह्णंतिमर्त्यांविमुखंमुकुंदात् ॥ स्वर्क्षोच्चगेवीर्ययुतेच
॥१११॥ साध्याश्चंद्रेचनीचेविबलेनसाध्याः ॥ ६६ ॥ केंद्रस्थैर्बलिभिःपापैरसाध्यादेवतागणाः ॥ सौम्यग्रहैश्चकेंद्रस्थैःसाध्यामंत्रस्तवार्चनैः ॥६७॥ ३
कंटकाष्टत्रिकोणस्थाःशुभाउपचयेशशी ॥ लग्नेचशुभसंदृष्टेरोगीरोगाद्विमुच्यते ॥६८॥रोगग्रहणमुपलक्षणम् ॥ संतानप्रतिबंधादावप्येवंदोष
।३।५।६।७।८।११।
निरूपणम् ॥ अथस्वामिभृत्यप्रश्ने ॥ त्रैलोक्यप्रकाशे ॥ शीर्षोदयेसौम्ययुतेक्षितोवासौम्यैर्द्वितीयाष्टमसप्तमस्थैः ॥ तृतीयलाभारिगतैश्च
पापैःसौख्यार्थलाभोनृपसेवकस्य ॥ ६९ ॥ लग्नाद्द्वितीयेमदनेष्टमर्क्षेवित्तक्षयंसंभ्रममार्तिमृत्युम् ॥ कुर्वंतिपापाःक्रमशोनरेंद्रात्भृत्यस्यत
स्मात्परिवर्जयेत्तम् ॥७० ॥ लग्नाद्द्वितीयाष्टमसप्तमर्क्षाःपापाःप्रणाशंनृपभृत्ययोर्द्वयोः ॥कुर्वंतितेष्वेवगताश्चसौम्याःकुर्युर्धनारोग्यसुखानि
चोभयोः ॥ ७१ ॥ शशांकसौम्यैरुदयास्तभावौदृष्टौयुतौवासबलैर्नपापैः ॥ प्रष्टुस्तदास्याद्धृदिपार्थिवस्यस्नेहप्रसादावकृपाप्रतीपात् ॥ १११ ॥
॥७२॥ अथान्यईशोममभविष्यतिनवाइतिप्रश्ने॥षष्ठेश्वरेणव्ययपेनकेंद्रेयदीत्थशालंकुरुतोविलग्नपः ॥प्रष्टस्तदान्यःप्रभुरर्थदःस्यादतःप्रतीपा

न्नभवेत्परः प्रभुः ॥ ७३ ॥ लग्नेश्वरेस्वर्क्षगतेस्वतुंगकेंद्रास्थितेशीतकरेत्थशाले ॥ शुभग्रहैर्दृष्टयुतेबलान्वितेप्रष्टुर्निजस्वाम्यमितार्थलाभः ॥ ७४ ॥ जायेश्वरेस्वोच्चनिजर्क्षसंस्थेकेंद्रास्थितेशीतकरेत्थशालगे ॥ शुभग्रहैर्दृष्टयुतेबलोत्कटैःप्रष्टुस्तदान्यःप्रभुरर्थदोभवेत् ॥ ७५ ॥ इदं गृहंवाशुभमन्यदालयंस्थानंत्विदंवाशुभमन्यदालयं ॥ ममात्रभद्रङ्गमनात्तुतत्रवापृष्टोदयेत्थंविधिनाविमृश्य ॥ ७६॥ अथनष्टद्रव्यलाभप्रश्नः ॥ तत्रधनप्राप्तौप्रश्नचिंतामणौ ॥ प्रश्नेचतुर्थाधिपतिस्तत्रस्थेवावलोकिते ॥ अवश्यंवर्तततत्रधनंचंद्रेऽथवावदेत् ॥७७॥ वित्तपेधनगेबंधौवास्तितत्रधनंबहु॥पापेतुर्यगतेद्रव्यंस्थितंतूर्णंनलभ्यते ॥७८॥ भौमेसप्ताष्टराशिस्थेधनमन्यत्रनाप्यते॥लग्नेतमोरविशिछद्रेतदाद्रव्यंनलभ्यते॥सप्ताष्टदशपातालेशोविधुर्धनदोगुरुः॥७९॥लग्नेश्वरेद्यूनगतेविलग्नेजायेश्वरेनष्टधनस्यलाभः ॥जायेशलग्नाधिपतीत्थशालेद्यूनोविनष्टंधनमेतिमर्त्यः॥८०॥लग्नेशजायाधिपतीत्थशालेलग्नेश्वरंयच्छतितस्करोऽर्थं॥सूर्येविलग्नेऽस्तमितेशशांकेनलभ्यतेयद्द्रविणंविनष्टम्॥८१॥कर्मेशलग्नाधिपतीत्थशालेचौरःस्वमादायपुरात्पलायते॥चंद्रेऽस्तपेचार्ककरप्रविष्टेतल्लभ्यतेनष्टधनंसतस्करं॥८२॥ अस्तेश्वरेकेंद्रगतेऽस्तिचौरस्तत्रैववान्यत्रपुराद्विनिर्गतः॥धर्मेशदुश्चिक्यपतीत्थशालेजायेश्वरेऽन्यत्रगतःसचौरः॥८३॥कर्मेशलग्नाधिपतीत्थशालेतल्लभ्यतेराजकुलाच्चचौर्यं ॥ त्रिधर्मपद्यूनपतीत्थशालेत्वन्यत्प्रदेशाद्गमनेतदाप्तिः॥८४॥शुभेत्थशालेहिमगौविलग्नेस्वस्थेथवानष्टधनस्यलाभः ॥ सुस्नेहदृष्टचारविणाशुभेनद्र

 ष्टेविलग्नेहिमगौचलाभः॥८६॥षट्पंचाशिकायाम्॥स्थिरोदयेस्थिरांशेवावर्गोत्तमगतेपिवा॥स्थितंतत्रैवतद्द्रव्यंस्वकीयेनैवचोरितम् ॥ ८६ ॥ 
आदिमध्यावसानेषुद्रेष्काणेषुविलग्नतः॥द्वारदेशेतथामध्येगृहांतेचवदेद्धनम्॥८७॥प्रश्नतंत्रे।पतितधनस्थप्रश्नेमिथोगृहस्थौविलग्नसप्तेशौ॥य
 दिमुथशिलंतयोःस्यात्तदाशुतत्रैववदंतिधनम्॥८८॥नष्टंक्कादिशिप्राप्तंपृच्छायांलग्नगेविधौप्राच्यां।तत्स्थानेयाम्यायामस्तेवारुण्यांवाभुव्युदी 
च्यां।८९।भुविचतुर्थे।यादिनेंदुःकेंद्रेतच्चत्वांरिशांकैश्चपंचयुतैः॥भागेदिक्क्रमउक्तोवन्ह्यवनीवायुवारिराशौवा।९०।नष्टवीतवित्तलब्धेःपृच्छायां
चौरसप्तमंततोलाभः।हिबुकंद्रव्यस्थानंलग्नंचंद्रश्चधननाथः॥९१।लग्नेशोऽस्तेस्तपतिनाचेन्मुथशिलीततोलाभः।यद्यष्टेशोलग्नेतदास्वयंतस्क
रोऽर्पयाति॥रविरश्मिगेधनेशेवास्तमितेतस्करस्यलाभःस्यात्॥९२॥लग्नेशदशमपत्योर्मुथशिलतःप्राप्यतेस्ववान्चौरः॥लग्नेशदृष्टचभावेचौरः
सहमात्रयायाति ॥ ९३ ॥ अस्ताधिपतौदग्धेरविरश्मिगतेऽथलभ्यतेचौरः॥लग्ननृपप्रकृतेत्थशालेराजभयाद्धनमिदंस्वयंदत्ते॥९४॥लग्नास्त
पयोर्नस्याद्यदिदृष्टिर्लग्नपस्तथाविकलः ॥ तत्तस्करोस्यहस्ताद्ददातिचौर्यंहिराजकुले ॥ ९५॥लग्नपमध्यपयोगेराजकुलंप्राप्यलभ्यतेचौर्यम् ॥ ११२ ॥
॥रंध्रंचौरस्यधनंधनपेतत्राथसप्तमेनाप्तिः॥९६॥रंध्रपतौधनपस्यतुमुथशिलयोगेप्राप्यतोवित्तं ॥ रंध्रपतौदशमपतेर्मुथशिलगेचौरपक्षकद्भूपः॥
धनपेविलग्नपेसतिदृष्टिविहीनेश्रुतिर्भवतिनाप्तिः॥९७॥ चौरज्ञानप्रश्नेलग्नगराशिदृशास्वगृहचौरः ॥ अनयोरेकदृशागृहसमीपवर्तीवसत्येषः

॥९८॥लग्नस्थेलग्नपतावस्तपयुक्तेचगृहगतश्चौरः॥अस्ताधिपतावंत्येसहजेवास्वीयभृत्योऽयम् ॥९९॥ अस्तेशेतुंगस्थेस्वगृहेवातस्करःप्रसि
द्धःस्यात् ॥ लग्नदशमास्तभावाः क्रमेणवीक्ष्याःस्वतुंगभवनादौ ॥ १०० ॥ यःखेटःस्याद्बलवान्सज्ञेयस्तस्करस्यबली ॥ लग्नादिषुयोग्र
हःस्वोच्चादिबलीतिष्ठातिसयज्जातिः ॥ सतस्यसहायकंकरोतीत्यर्थः ॥ एवंयोगंतुविनाद्यूनेशस्यैवबलमभिग्राह्यम् ॥ इत्थंचौरज्ञानेचौर.
सूर्येग्रहेश्वरस्यपिता ॥ चंद्रेमाताशुक्रेभार्यामंदेसुतोभवेन्नीचे ॥१॥जीवेगृहप्रधानं भौमेपुत्रोथवाभ्राता ॥ ज्ञेस्वजनोमित्रंवाज्ञात्वेत्थंपुण्यसह
ममावेश्यं॥२॥तस्मिन्क्रूराहष्टेपुरानचौरोऽस्तपेपुरापिस्यात् ॥ अस्तेशान्मूसरिफेभौमेचौरःपुरापिनिगृहीतः ॥३॥सप्तेशेरविपुत्रेचंद्रदृशा
तस्करोहिपाखंडी॥जीवोविलोक्यलोकंभौमेखातेनपालकंभक्त्या॥४॥प्रातिकुंचिकयापहृतंसितेतिथिर्ज्ञेप्रपंचकरः॥चौरस्यवयोज्ञानेसितेयुवा
ज्ञेशिशुर्गुरौमध्यः ॥ ५ ॥ तरुणोभौमेमंदेवृद्धोर्केस्यादतिस्थविरः ॥ रविनभयोःस्वमंदिरेस्मरभूमिलग्नयोर्मध्यं॥६॥चरतिरवौनवमध्यमवृद्ध
वयोतीतकाःक्रमशः॥नष्टस्थानेप्रश्नेतुर्येभूम्यग्निवायुजलमध्यात्॥७॥योभवतिराशिरस्मात्स्थानंज्ञेयंगतधनस्य ॥ अथचतुर्थगृहेतुर्येश्वरोथ
यःस्याद्ग्रहस्ततोज्ञेयम्॥ ८ ॥ मंदेमलिनस्थानेचंद्रेंबुनिगीष्पतौसुरारामे॥भौमेवन्हिसमीपेरवौगृहाधीश्वरासनस्थाने ॥९ ॥तल्पेशुक्रेसौम्ये
पुस्तकवित्तान्नयानपार्श्वेच॥अंबुपदेनकूपादिसन्निधौहस्तपादप्रक्षालनस्थानेवेत्यर्थः॥चौरोयमथनवेतिक्रूरेंद्रोमुथशिलेचचौरःस्यात् ॥१०॥

ता० टी० सौम्यशशिमुथशिलेखलुनभवतिचौरःप्रवक्तव्यम् ॥ किमनेनतस्करत्वंकदापिविहितंनवेतिपृच्छायाम् ॥ ११ ॥ लग्नपशशिनोरेकस्मादपिमूस १०
रिफेऽस्तपेविहितं ॥ चौरःस्त्रीपुरुषोवापृच्छायामस्तपेस्त्रियोराशौ ॥ १२ ॥ स्त्रीखेटेस्त्रीदृष्टेचौरःस्त्रीव्यत्ययात्पुरुषः ॥ ल
॥११३॥ ग्नेशेनवमांशतोवयःप्रमाणजातयोज्ञेयाः ॥ चौरोयमिहानंतंशास्त्रंकथितोयमुद्देशः ॥ १३ ॥ अथविशेषतःसंतानप्रश्नःलग्नेश्वरेणाथ ३
निशाकरेणयदीत्थशालंकुरुतेसुतेशः ॥ पंचमेशइत्यर्थः॥शुभःशुभैःसंयुतईक्षितःस्यात्ससंततिंप्रष्टुरसौविदध्यात् ॥ १४ ॥ पुंस्त्रीगृहाः
पुत्रगृहंविलग्नात्पश्यंतियावंतिइहातिवीर्याः॥तत्संख्यकाःस्युस्तनयाश्चकन्याःशुभेशयोगात्सुतभांशतुल्याः॥१५ ॥ लग्नेशपुत्राधिपतीपरस्प
रंनपश्यतश्चेदुदयंचपंचमं॥पापेत्थशालौसुतलग्नपौचप्रष्टुस्तदासंततिनास्तितांवदेत् ॥१६ ॥ पुत्रालयेसिंहवृषालिकन्याःप्रश्नोदयाज्जन्मभत
स्तथेंदोः॥अल्पप्रजःसंततिपृच्छकःस्यात्पापैःसुतर्क्षेसहितेक्षितेवा॥१७॥स्वर्क्षस्थितौरंध्रगतौयमार्कौप्रष्टुःस्त्रियंसंदिशतश्चवंध्यां॥छिद्रस्थि
तौचंद्रबुधौसदोषांवाकाकवंध्यातनयांप्रसूतिम् ॥ १८ ॥अत्रचंद्रेबलवतिकन्याप्रसूतिं ॥ पुंग्रहदृष्टेकाकवंध्येतिज्ञेयम् ॥ बुधेबलवतिवंध्या ॥११३॥
॥ मृतप्रजाछिद्रगयोःसितेज्ययोर्गर्भस्त्रवाभूमिसुतेष्टमर्क्षे ॥ छिद्रेश्वरेछिद्रगतेऽतिवीर्येपुष्पंनविंदत्यबलासुतप्रदम् ॥ १९ ॥ शुक्रार्कयोरष्ट

मसंस्थयोर्वाक्रूरैर्द्धेनांत्याष्टमराशिसंस्थैः ॥ जाताःपुरस्तान्म्रियतेप्रजावैप्रष्टुर्नचाग्रेशुभसंततिःस्यात् ॥ २० ॥ रिःफेश्वरेकेंद्रगतेचसौम्यैर्युते
क्षितेजीवतिबालकश्च ॥ आपूर्य्यमाणेशुभयुक्तइंदौकेंद्रेशिशुर्जीवातिदीर्घकालं ॥ २१ ॥ चिंतामणौ ॥ पंचमेशोऽथलग्नेशोविषमर्क्षगतौयदा॥
पुत्रजन्मप्रदौज्ञेयौकन्यानांसमराशिगौ ॥ २२ ॥ सुताधिपंनृराशिस्थंपुंराशिस्थोपिलग्नपः ॥ वीक्ष्यतेपुत्रदःप्रोक्तोयुग्मराशौचदारिका ॥
२३ ॥ युग्मराशिगतेलग्नेयदातत्रशुभग्रहाः ॥ गर्भेपत्यद्वयंवाच्यंदैवज्ञेनविपश्चिता ॥ २४ ॥ विषमोपगतोलग्नाच्छनिःपुत्रसुखप्रदः ॥
समभेयोषितांजन्मविशेषोजातकोक्तिवत् ॥ २५ ॥ अथभोजनचिंता ॥ चिंतामणौ ॥ कटुकोलवणस्तिक्तोमिश्रितोमधुरोरसः ॥ अ
म्लःकषायकथितारव्यादीनांरसाबुधैः ॥ २६ ॥ लग्नंपश्यतियःखेटस्तस्ययःकथितोरसः ॥ भोजनेऽसौरसोवीर्यक्रमाद्वाच्याःपरेरसाः ॥२७
चंद्रोयस्यमुथशिलस्तस्यविशेषंवदेद्भुक्तौ ॥ लग्नेराहौमंदेरविदृष्टेभोजनाभावः ॥ २८ ॥ प्रश्नतंत्रे ॥ कीदृग्भोज्यभुक्तंपृच्छायांयदिभवे
त्स्थिरंलग्नं ॥ तद्भुक्तमेकवेलंह्यात्मनिवेलद्वयंचरेत्वसकृत् ॥ २९ ॥ चंद्रेलग्नगतेस्यात्क्षारंभौमेचकटुकमम्लंगुरौ ॥ मधुरंदिनकृतितिक्तं
शुक्रेस्निग्धंबुधेचसर्वरसं ॥ ३० ॥ मंदेकषायमशुभान्मूसरिफेशशिनिमुथशिलेशुभेऽरिदृशा ॥ उद्वाहात्प्रियदृष्ट्याप्रायणिकत्वात्समागतंभो
ज्यम् ॥ ३१ ॥ अयमस्यार्थः ॥ चंद्रःशुभेनमुथशिलीपापेसराफश्चेत्तदेतदुक्तं ॥ पापेसराफेचशुभेत्थशालेचंद्रेतुभुक्तंशुभमन्नमीशं ॥ ३२॥

शुभेसराफेत्वशुभेत्थशालेचंद्रेकदन्नंमधुआज्यवर्ज्यं ॥ पापेत्थशालेऽथखलेसराफेशक्यंनभोक्तुंपरतोपिलब्धम् ॥ ३३ ॥ चंद्रेस्वनाथदृष्टेसु
खभोजनमन्यथाकष्टात् ॥ गुरुमुथशिलेसगौरवमर्केणमुथशिलेऽतिशुचितीक्ष्णम् ॥ ३४ ॥ शुक्रेसुस्वादुरसंसहास्यगीतंबुधेजनाकीर्णं ॥ श
स्त्रकथाढ्यंशनिनाकुस्थानगतंकुजेचोष्णम् ॥ ३५ ॥ यदिवदतिभोजनार्थनिमंत्रितोयामिशशिमहीसुतयोः ॥ एकास्थितयोःकेंद्रेमुथशिल
योर्वापिपूर्णताभवति ३६ ॥ विधिनानेनशनेःस्यात्कुभोजनंज्ञसितयोरभीष्टान्नं ॥ जीवस्यतुष्टिजनकंहोरेशेतनुखगेस्वयमुपैति ॥ ३७ ॥
यश्चंद्रेणमुथशिलीतास्मिन्नीशेतनोःस्वगृहभोज्यं ॥ वित्तेशेभृत्यगृहेभ्रातॄणांसहजपेतथाऽन्यत्र ॥ ३८ ॥ यश्चंद्रेणमुथशिलीसयस्यभावस्ये
शस्तत्संबंधेनभोजनमितिज्ञेयं ॥ लग्नस्थितेसूर्यसुतेऽथराहौसूर्येक्षितेवैरिनिमंत्रितस्य ॥ स्याच्छस्त्रघातःशशिभौमयोश्चलग्नस्थयोःसौरिदृ
शास्तिघातः ॥ ३९ ॥ जीवेसितेचंद्रगतेबलाढ्येचंद्रेबुधेकेंद्रगतेशुभान्विते ॥ त्रिलाभषष्ठास्पदगैश्चपापैःस्यात्प्रेमनिर्वैरकरंसुभोजन
म् ॥ ४० ॥ भोज्यंबुभुक्षाभोक्ताचसुखाद्यांगबलक्रमात् ॥ लग्नपोभोज्यदस्तेषांबलेनफलमादिशेत् ॥ ४१ ॥ तुर्येशलाभाधिपतीत्थशाले
शुभग्रहेक्षायुतितत्सुभोजनं ॥ इत्थंखलग्नास्तपतीत्थशालेलाभेश्वरेतत्सुखलाभऊह्यः ॥४२ ॥ अथस्वप्नः ॥ लग्नेऽर्केन्दुपतिर्वाह्निशस्त्रेपश्य

तिलोहितं ॥ श्वेतंपुष्पंसितंवस्त्रंगंधंनारींचशीतगौ ॥४३॥ रक्तमांसंप्रवालंचसुवर्णंधरणीसुते ॥ बुधेखेगमनंजीवेधनंबंधुसमागमं ॥४४॥
जलावगाहनंशुक्रेशनौतुंगावरोहणम् ॥लग्नलग्नांशपवशात्स्वप्नोवाच्योऽथवाबुधैः॥४५॥सर्वोत्तमबलाद्वापिखेटान्बुद्ध्याविचिंतयेत्॥ बलसाम्ये
फलंमिश्रंदुःस्वप्नोनिर्बलैःखगैः॥४६॥उत्पलः॥रविलग्नेशशिदृष्टेरविशशिसमेतविलग्नाद्वा॥स्वप्नंदृष्टंप्रवदेत्प्रष्टुर्लग्नांतरात्कालः ॥४७॥अथाखे
टकः॥लग्नेशजामित्रपतीत्थिशालेसुस्नेहदृष्ट्यात्वनयोर्द्वयोश्च॥आखेटकःस्यात्सफलोऽरिदृष्ट्यास्यान्निःफलोवाल्पफलोऽतिकष्टात्॥४८॥ लग्ने
श्वरेद्यूनगतेविलग्नजायेश्वरेयान्मृगयाप्रभूता॥ जामित्रनाथेहिबुकेनभःस्थेचाखेटकःस्वल्पतरोऽपिनस्यात् ॥४९॥ ज्ञभौमौसबलौसिद्धिरस्तां
शेमृगयाच्युतिः ॥लग्नद्यूनेतत्पतीचहेतुस्तैर्जलराशिगैः ॥५०॥ जलजंखेटकंब्रूयाद्वन्यर्क्षैर्वनसंभवः ॥क्रूराक्रांतानियावंतिमध्येभार्नादुलग्नयोः
॥५१॥तावंतःप्राणिनोवाच्याद्वित्रिघ्नाःस्वांशकादिषु॥५२॥अथकलहः॥भुवनदीपके॥क्रूरःखचरोलग्नेविवादपृच्छासुजयतिविवादंतम् ॥सर्वाव
स्थासुपरंनीचेऽस्तेजयतिनाद्विषतः ॥५३॥ लग्नद्यूनेमुक्त्वापरस्परंक्रूरयोर्झकटदृष्टौ ॥ विवदद्वादियुगंतच्छुरिकाभ्यांप्रहरतितदैवम् ॥५४॥
लग्नेद्यूनेचयादिक्रूरःखचरोविवादिनोर्नतदा ॥ कलहनिवृत्तिःकालेजयतिहिबलवान्गतबलंतु ॥५५॥ लग्नेशसुतदःसौम्याःकेंद्रेसंधिर्नवा
न्यथा ॥ लग्नद्यूनेशषष्ठेशारित्वेप्यन्योन्यविग्रहः ॥ ५६ ॥ गृहमागतोनयदसौकिंबद्धःकिमथवाहतइतिप्रश्ने ॥ मूर्तौक्रूरोयदितन्नहतोबद्धो

थवापुरुषः ॥८७॥ त्रिकोणचतुरस्रास्तस्थितः पापग्रहोयदि ॥ ग्रहैर्निरीक्षितः पापैर्नूनंबंधनमादिशेत् ॥८८॥ सप्तमगोऽष्टमगोवाचेत्क्रूरस्तद्व 
 तोपिवाबद्धः ॥ मूर्तौचसप्तमेवायद्वालग्नेष्टमेपिभवेत् ॥ क्रूरस्तदसौपुरुषोबद्धश्चहतश्चमुच्यतेचपरं ॥ ८९ ॥ बद्धःसप्ताष्टगेक्रूरेमूर्त्यस्तेचा 
 ष्टलग्नगे ॥ बद्धोविमुच्यतेऽत्याशुक्रूरःश्रेयांस्तनौतदा ॥ ९० ॥ अथबद्धमोक्षप्रश्नः ॥ प्रश्नदीपके ॥ बद्धोऽस्तितत्किंभवितेतिप्रश्नेविमु
च्यतेऽसौखलुमृत्युयोगे ॥ कदाविमुच्येदितिपृच्छमानेशुभंकदाभाविचतैर्मृतिःस्यात् ॥ ९१ ॥ मुक्तिप्रश्नेयदाकेंद्रेकेंद्रेशाःस्युर्नमोक्षदाः ॥
तस्मिन्वर्षेऽस्थलग्नेशःपतितःकेंद्रगेनच ॥ ९२ ॥ संबंधेप्सुःसचेत्क्रूरोमृतीशःस्यात्तदामृतिः ॥लग्नेशेस्तमितेऽबुस्थेकुजदृष्टेतदामृतिः ॥९३॥
चंद्रश्चांबुगपापेनमृत्युनाथेनयोगकृत् ॥ तदागुप्त्यांमृतिश्चंद्रःकेंद्रेमंदयुगीक्षितः॥ ९४॥ दीर्घपीडाचभौमेनयुग्दृष्टौबंधताडने ॥ दृश्यार्द्धेलग्न
पश्चेत्स्याद्व्ययपेनेत्थशालवान् ॥ ९५ ॥ पलायतेतदाबद्धोव्ययगेलग्नगेपिवा ॥ तृतीयनवमस्वामीव्ययगोलग्नपेनच ॥ ९६ ॥ यदी 
त्थशालयोगेप्सुस्तदापिचपलायते ॥ दृश्यार्द्धेत्वुपचारेणचंद्रोमुथशिलस्तदा ॥ ९७ ॥ बंधमोक्षस्त्रिधर्मेशःसंग्रहःशीघ्रमोक्षकृत् ॥ प
तितेंदुस्त्रिधर्मस्थग्रहसंबंधकृत्तदा ॥ ९८ ॥ केंद्रस्थत्रिभवेशेनयोगेप्सुश्चेत्तदाचिरात् ॥ यावच्छुक्रोबलीलग्नेतावत्कर्ताबलाधिकः ॥ ९९ ॥

अस्तंगतेतनौशुक्रेबद्धमोक्षादिसंभवः ॥ म्रियतेयेनयोगेनतेनयोगेनमुच्यते ॥ ७० ॥ मेषेतुलेचशीघ्रंस्यात्कर्केनक्रेसकष्टता ॥ स्थिरेचि
राद्विदेहस्थेमोक्षोमध्यमकालतः ॥ ७१ ॥ अथनौकाप्रश्नः ॥ क्षेमायातंवहित्रस्यमज्जनंवपनंजले ॥ पण्यव्यवहतौलाभोनाविप्रश्नेचतु
ष्टयं ॥ ७२ ॥ वहित्रमत्रनौका ॥ नौर्लाभदास्यान्ममनेतिपृष्टेकेंद्रेशुभाश्चेदितरेषुपापाः ॥ ७३ ॥ बलोज्झिताःक्षेमजयार्थदानौर्भावीति
वाच्यंविदुषाविमृश्य ॥ ७४ ॥ लग्नाधिपेवक्रिणिचास्यनाथेव्यावृत्यनौरेतिचमार्गतःसा ॥ चेत्सौम्यदृष्टःकुशलेनपापैर्दृष्टस्तदावस्तुवि
नेतिवाच्यम् ॥ विलग्नरंध्राधिपतीस्वगेहेप्रवेक्ष्यतश्चेद्व्यवहारलाभः ॥ यदाऽष्टमेसौम्यखगाबलाढ्यास्तदातरीलाभसुखप्रदास्यात् ॥ ७५ ॥
कुशलायातिपृच्छायांमृत्युयोगेसमागते ॥ तदानौरेतिशीघ्रेणलाभाद्यंचान्ययोगतः ॥ ७६ ॥ लग्नेशंचंद्रनाथंवाचंद्रंवामृत्युपोयदि ॥ पश्ये
त्क्रूरदृशानावासमंनश्यतिनौपतिः ॥ ७७ ॥ लग्नेशाष्टपतिःस्वस्यगेहंनालोकतेयदि ॥ तदायानस्यवक्तव्यंनिश्चितंमज्जनंबुधैः ॥ ता
वुभौसप्तमस्थौचेज्जलेवापनिकांवदेत् ॥७८॥ पूर्वस्मिन्योगेवस्तुसहितनौकामज्जनेनचतत्रलाभः ॥ द्वितीययोगेनौकायातिवस्तुनोमज्जन
मितिविशेषः ॥ तदुक्तंयवनाचार्यैः ॥ द्यूनेवापनिकांकृत्वायानमायातिमंदिरं ॥ नौकायामारोप्यमाणंवस्तुवापनीयंसाजलेमज्जतीति
भावः ॥ लग्नचंद्रपतिक्रूरदृष्ट्याऽन्योन्यंयदीक्षितौ ॥ तदापोतजनानांचमिथःकलहमादिशेत् ॥ ७९ ॥ अथकिंवदंतीजनश्रुतिः किंभवती

तिसत्याप्रश्ने ॥ लग्नंतुलग्नेश्वरशीतगूदयैःशुभान्वितैःकेंद्रगतैस्तुसत्या ॥ ८० ॥ शुभदृग्योगतःसौम्यांवार्तासत्यांविनिर्दिशेत् ॥ पातदृ
ग्योगतोदुष्टावार्तासत्येतिकीर्त्यते ॥ ८१ ॥ लग्नेश्वरेभाविवक्रेमिथ्यावार्ताभविष्यति ॥ ८२ ॥ अथक्रयिविक्रयिणौ ॥ क्रेतालग्नपतिर्ज्ञेयोवि
क्रेताग्रपतिःस्मृतः ॥ गृह्णाम्यहमिदंवस्तुप्रश्नएवंविधेसति ॥ ८३ ॥ बलशालिविलग्नंचेद्गृह्यतेतत्क्रयाणकम् ॥ तस्मात्क्रयणकाल्लाभःप्रभुर्भ
वतिनिश्चितम् ॥ ८४ ॥ विक्रीणाम्यमुकंवस्तुप्रश्नेएवंविधेसति ॥ आयस्थानेबलवतिविक्रेतव्यंक्रयाणकं ॥ ८५ ॥ अथसस्यनिष्पत्तिः॥
दिशिकस्यांभवेत्सस्यनिष्पत्तिःक्वचसानहि ॥ पूर्वदेशस्यभंगोहिकदिशिक्वतनेनहि ॥ ८६ ॥ चतुर्णामपिकेंद्राणांमध्येयत्रशुभग्रहः ॥ त
स्यांचसस्यनिष्पत्तिःस्वस्थंचैवभविष्यति ॥ ८७ ॥ यस्यांदिशिशनिःपापैर्युतोवाप्यवलोकितः ॥ दिशितस्यांचतत्स्वास्थ्यंदुर्भिक्षंचभ
विष्यति ॥ ८८ ॥ दिशियस्यांरविस्तत्रधान्यनाशोनृपाद्भवेत् ॥ यत्रापिमंगलस्तत्रधान्यनाशोऽग्निभिस्तथा ॥ ८९ ॥ यस्यांदिशिशु
भाःखेटाःसमस्तबलशालिनः ॥ निष्पन्नासैवविज्ञेयासस्यस्वास्थ्यंचतत्रहि ॥ ९० ॥ केंद्रेषुसर्वतःपापाःसमस्तबलसंयुताः ॥ देशस्तदा
विनष्टोऽसौज्ञातव्यः शास्त्रकोविदैः ॥ ९१ ॥ अथप्रकीर्णकाध्यायः ॥ भुवनदपिके ॥ लग्नपोमृत्युपश्चापिमृत्यौस्यातामुभौयदि ॥ स्थि

तौद्रेष्काणएकस्मिन्प्रष्टुर्लाभस्तदाध्रुवं ॥ ९२ ॥ एवंद्वादशभावेषुद्रेष्काणैरेवकेवलम् ॥ बुधैर्विनिश्चयंब्रूयाद्योगेष्वन्येषुःनिस्पृहः ॥ ९३ ॥
प्रश्नकालेसौम्यवर्गेलग्नेयदधिकोभवेत् ॥ ग्रहभावानपेक्षेणतदाख्येयंशुभंफलम् ॥ ९४ ॥ लग्नाधिपश्चलाभस्याधीशश्चदायकोभवेत् ॥ लग्ना
धिपस्ययोगोलाभाधीशेनलाभकरः ॥ ९५ ॥ भवतिपरलाभकरस्तदैवसयादिचंद्रदृग्लाभे ॥ योगाःसर्वेप्यफलाश्चंद्रमृतेव्यक्तमेतच्च ॥९६॥
कर्माधीशेनैवंकर्माधीशेनचनिवृत्त्यधीशेन ॥ मृत्युपतिनाचयोगेलाभाधिशस्यवक्तव्यम् ॥ ९७ ॥ तत्तत्स्थानेक्षणतःपुण्यविवृद्धिश्चकर्मवृ
द्धिश्च ॥ विबुधैस्तदानिवृत्तिर्मृत्युर्भावापरेप्येवम् ॥ ९८ ॥ लग्नेशोयदिषष्ठःस्वयमेत्यारिपुर्भवत्यात्मा ॥ मृत्युकृदष्टमगोसौव्ययगोसौसततं
व्ययंकुरुते ॥ ९९ ॥ लग्नस्थचंद्रजंचंद्रःक्रूरोवायदिपश्यति ॥ धनलाभोभवत्याशुकिंत्वनर्थोपिपृच्छतः ॥ १०० ॥ अथसामान्यतोभाव
विचारः ॥ इंदुःसर्वत्रबीजाभोलग्नंचकुसुमप्रभम् ॥ फलेनसदृशोंशश्चभावःस्वादुसमप्रभः ॥ १ ॥ लग्नपतिर्यदिलग्नंकार्याधीशश्चवीक्षतेकार्यं ॥
लग्नाधीशःकार्यंकार्येशःपश्यतिविलग्नम् ॥ २ ॥ लग्नेशःकार्येशंविलोकयेल्लग्नपंचकार्येशः ॥ शीतगुदृष्टौसत्यांपरिपूर्णाकार्यसंसिद्धिः ॥ ३ ॥
कथयंतिपादयोगंपश्यतिसौम्योनयल्लग्नम् ॥ लग्नाधिपंचपश्यतिशुभग्रहश्चार्द्धयोगोत्र ॥ ४ ॥ एकःशुभोग्रहोयदिपश्यतिलग्नाधिपंविलोकय
ति ॥ पादोनंयोगमाहुस्तदाबुधाःकार्यसंसिद्धिः ॥ ५ ॥ अथलाभादौकालावधिनिर्णयः ॥ उत्पलः ॥ उदयोपगतंराशिंतत्कलीकृत्याले

स्तितःशेषः॥६॥ग्रहगुणकारोज्ञेयोदैवविदापंचविंशतिःसैका॥मनवोंकाष्टौत्रितयंभवाश्च९।२१
ता० नी० तिकागुणयेत्॥छायांगुलैश्चकुर्यात्तद्धत्वामुनिभिस्ततःशेषः॥६॥ग्रहगुणकारोज्ञेयोदैवविदापंचविंशतिःसैका
मणयित्वैवंप्राग्वत्तद्धत्वासौम्यस्यभवेदुदयः ॥ कार्यप्राप्तिःप्रष्टुर्वक्तव्यानेतरैर्ग्रहैर्भवति ॥ ८ ॥ ३
१४।९।८।३।११ सूर्यादितोज्ञेयाः ॥ ७ ॥ यस्यनशुध्यतिवर्गोविज्ञेयस्तद्वशात्कालः ॥ ९ ॥ आरदिवाकरशेषेदिवाकरपक्षाश्चभृगु
॥११७॥ गुणकारैक्यविभक्तःकार्यःसूर्यादिगुणकसंशुद्धः ॥ यस्यनशुध्यतिवर्गोविज्ञेयस्तद्वशात्कालः

आधानेथप्राप्तौगमनागमनेपराजयेविजये॥रिपुनाशेवाकालेपृच्छायांनिश्चि
शशिनोः ॥ गुर्ववशेमासऋतवःसौम्येशनैश्चरेब्दाःस्युः ॥१०॥ चंद्रस्यचनिर्दिष्टास्तैःस्युःप्रथमोद्भवैर्वर्णैः ॥ १२ ॥ ज्ञात्वा
तंब्रूयात् ॥ ११ ॥ अकचटतपयशवर्गारविकुजसितसौम्यजीवसौराणाम् ॥ रात्रौलग्नंप्रवदेत्पृच्छायुग्मंकुजज्ञजीवानाम् ॥
तस्माल्लग्नंविज्ञायशुभाशुभंचवदेत् ॥ वर्गादिमध्यमांत्यैर्वर्णैःप्रश्नोद्भवैर्विषमराशिः ॥ १३ ॥
सितरविजयोश्चनैवंरविशशिनोरेकराशित्वात् ॥ १४ ॥ तस्मात्प्राग्वत्प्रवदेत्पृच्छासमयेशुभाशुभंसर्वम् ॥ कालस्यचविज्ञानादेत
च्चिंत्यंबहुप्रश्ने ॥ १५ ॥ अथमासचिंता ॥ पृथुयशाः ॥ स्वांशेविलग्नेयदिवात्रिकोणेस्वांशेस्थितःपश्यतिधातुचिंता ॥ परांश ॥ ११७ ॥
कस्थश्चकरोतिजीवंमूलंपरांशोपगतःपरांशम् ॥ १६ ॥ धातुंमूलंजीवमित्योजराशौयुग्मेविंद्यादेतदेवप्रतीपम् ॥ लग्नेयोंशस्तत्क्रमा
द्रण्यमेवंसंक्षेपोयंविस्तरात्तत्प्रभेदः ॥ १७ ॥ उत्पलः ॥ बलिनौकेंद्रोपगतौरविभौमौधातुकरौप्रश्ने ॥ बुधसौरीमूलकरौशशिगुरु

शुक्राःस्मृताजीवाः ॥ १८ ॥ मेषालिसिंहलग्नेकुजार्कयुक्तेनिरीक्ष्यतेप्यथवा ॥ धातोश्चिंतांप्रवदेद्युगघटकन्यागतैर्लग्नैः ॥ १९ ॥ बुधरवि जयुतैर्मूलंवृषतुलहरिमीनचापकर्कटकैः ॥ चंद्रगुरुशुक्रयुतैर्दृष्टैर्जीवोविनिर्देश्यः॥२० ॥ अत्रधातुचिंतायांधातोर्बह्वातिस्वरूपविशेषनिर्णयो ग्रहलग्नराशिवशाद्वाज्ञेयः॥राशिस्वरूपंग्रहस्वरूपंचजातकेप्रश्नेउपोद्धातप्रसंगेनिरूपितम्॥एवंजीवचिंतायांब्राह्मणादिजातिगौरादिज्ञानंचो ह्यं ॥ अथकस्यभावस्यसंबंधेनायंप्रश्नइतिजिज्ञासायांवाज्ञानप्रकाशे ॥ लग्नलाभपयोःप्राणितयोर्यद्भावगःशशी॥तस्यभावस्ययाचिंताप्रष्टुः साहृदिवर्तते ॥ १ ॥ भावचिंतारूपलक्षणवर्णानामित्यादिनानिरूपिता ॥ एवंबलाधिकाचंद्राल्लग्ननाथोयतःस्थितः ॥ दैवज्ञेनविनिर्णेयः प्रश्नसद्भावसंभवः ॥ २ ॥ पृथुयशाः ॥ आत्मसमंलग्नगतैस्तृतीयगैर्भ्रातरःसुतंसुतगैः ॥ मातावाभगिनीवाशत्रुगैः शत्रुर्भार्यास्यात् ॥ ३ ॥ सप्तमसंस्थैर्नवमैर्द्धर्माश्रितागुरुर्दशमैः ॥ स्वांशपतिमित्रशत्रुप्रुतथैववाच्यंबलयुतेषु ॥ ४ ॥ चरलग्नेचरभागेमध्याद्भ्रष्टेप्रवासचिंतास्यात् ॥ भ्रष्टःसप्तमभवनात्पुनर्निवृत्तोयदिनवक्री ॥ ९ ॥ मयाकास्त्रीउपभुक्तामनसिचिंतितावाकीदृशीवेतिप्रश्ने ॥ अस्तेरविसितवक्रैःपरजायां स्वांगुरौबुधेवेश्याम् ॥ चंद्रेचवयःशशिवत्प्रवदेत्सौरेंऽत्यजादीनां ॥६॥ कुमारिकांबालशशीबुधश्चवृद्धांशानिःसूर्यगुरुप्रसूताम् ॥ स्त्रीकर्क शांभौमसितौचधत्तेएवंवयःस्यात्पुरुषेषुचैवम् ॥ ७ ॥ ॥ अथसुरतप्रश्नः ॥ शुभेत्थशालेहिमगौचतुष्टयेसौख्यातिरेकःसविलासहासः ॥

क्रूरेत्थशालेहिमगौसरोषेक्रूरान्वितेभूत्कलहोनृवध्वोः ॥ ८ ॥ पीडाथवासीत्सुरतेयुवत्यारजोयथास्तर्क्षमुपैतितद्वत् ॥लग्नेसुरेज्येभृगुजेकल
ता० नी० त्रेतुर्येहिमांशौसविलासहासौ ॥ ९ ॥ शुभग्रहोत्थेचकबूलयोगेयुतोरजःपुष्पसुगंधयुक्तम् ॥ स्वर्क्षोच्चगेहर्म्येरतंनिगद्यंस्थितेद्विदेहेवनितास्व प्र०
कीया ॥ १० ॥ चरोदयेसारमितेपरस्त्रीकेंद्रेशनौसासुरजोदिवारतिम् ॥ निशोदयेशात्रिखगेचरात्रौदिवानिशंतद्बलिनोर्द्विखेटयोः ॥ ११॥
॥११८॥ अथमहर्घचिंता ॥ मेषवृषेचमिथुनेशुभयुक्तदृष्टेनग्रैष्मिकंतुसुलभंभवतिपृथिव्यां ॥ सूर्येधनुर्मृगघटेषुचसारधान्यंकुर्यात्समर्घमशुभैःसहितोऽ ३
समर्घं ॥ १ ॥ लग्नेबलाढ्येनिजनाथसौम्यैर्युक्तेक्षितेकेंद्रगतैःशुभैश्च ॥ सर्वैःसमर्घंविबलैर्विलग्नेकेंद्रेषुपापैःसकलंसमर्घं ॥ २ ॥ राकाकुहूश
शिपभास्वदजप्रवेशेलग्नेश्वराशुभखगैर्युतवीक्षिताश्चेत् ॥ तद्वत्सरेजगतिसौख्यमलंप्रकुर्युःपापार्दितेगदनरेंद्रभयंप्रजानां ॥ ३ ॥ मेषप्रवे
शोदयतःस्वरांशःकेंद्रेषुपापोडुपतीत्थशाले ॥ पापग्रहैर्दृष्टयुतेऽथतस्मिन्वर्षेगदार्तिःप्रियमन्नमुर्व्याम् ॥४॥ भानोर्मेषःप्रवेशोदयभवनपतिः
सद्ग्रहःस्वोच्चसंस्थःस्वर्क्षस्थोवापिकेंद्रेशुभगगनचरैर्दृष्टयुक्तोबलाढ्यः ॥ तस्मिन्वर्षेविदध्याज्जगतिशुभसुखंभूरिसस्यंसुवृद्धिःक्रूरःक्रूरार्दितो
वादिशतिनृपभयंकष्टमन्नंमहर्घम् ॥ ५ ॥ अथमनुष्याणांजन्मलग्नात्प्रतिवर्षेशुभाशुभज्ञानम् ॥ जन्मोदयाद्भास्वदजप्रवेशलग्नंहियद्भावगतं ॥११८॥
शुभान्वितम् ॥ तद्भाववृद्धिंविदधातितस्मिन्वर्षेनृणांपापयुतंतदन्यथा ॥ ६ ॥ जन्मोदयेदेहसुखंधनेऽर्थलाभस्तृतीयेचकुटुंबवृद्धिः॥तुर्येसुहृ

त्सौख्यमथात्मजाप्तिः पुत्रेऽथषष्ठेऽरिपराजयःस्यात् ॥ ७ ॥ स्त्रीसौख्याप्तिर्भवतिमदनेमृत्युरुग्भीश्चरंध्रे धर्मार्थाप्तिस्तपसिदशमेवित्तसौ
ख्यास्पदाप्तिः ॥ लाभेलाभःसुखधनचयोदुःखदारिद्र्यमंत्येपुंसोमेषंप्रविशतिरवौजन्मलग्नाद्विलग्ने ॥ ८ ॥ अथताजिकमतानुसारेणप्रश्नाद्यु
पयोगिनइत्थशालादयोयोगाःकतिपयानिरूप्यंते॥नवपंचमयोर्दृष्टिःपादोनासर्वदृष्टितःसबला॥ मेलापकदृष्टिरियंप्रत्यक्षस्नेहदृष्टिरिति॥९॥
तृतीयैकादशयोर्दृष्टौयोवीक्षतेतत्तृतीयदृशा ॥ तद्दृष्टिर्द्व्यंशोनानान्यत्रतुषड्भागदृष्टिश्च ॥ १० ॥ अनयोर्दृष्टिर्गुप्तस्नेहाद्दृष्टिःसर्व
त्रकार्यसिद्धिकरी ॥ दशमचतुर्थदृष्टिःपादोनादुर्जनाख्यातुः ॥११॥ यत्रोभयसप्तमकेसासकलाप्रत्यक्षदुर्जनादृष्टिः ॥ एकर्क्षयोःस्थितयोर्दृ
ष्टिर्मतासकलातिस्त्रोदृशःक्षुताख्याःस्युः ॥ सर्वाश्चैताहिदृशोर्द्वादशभागांतरेभवेयुश्चेत् ॥ तत्सर्वविशेषःप्रोक्तोदृष्ट्यनुसारात्फलंचिंत्यं
॥ १२ ॥ सूर्यःपंचदशांशैरिंदुर्द्वादशभिरवनिजोऽष्टाभिः ॥ सप्तांशैर्बुधशुक्रौगुरुमंदौनवभिरीक्षेते ॥ १३ ॥ एतेदीप्तांशकाःपूर्वतःपरतश्च
ज्ञेयाः ॥ यदिशीघ्रस्वल्पांशैःपश्चात्मंदंधनांशमुपगम्य।।स्वदीप्तभागमस्तैर्दत्तेध्रुवमित्थशालयोगोऽयम् ॥ १४॥ लिप्तार्द्धविलिप्तिकाभ्यांय
दिहीनोमंदतोप्यतुल्यःस्यात् ॥ तत्पूर्णमित्थशालमुथशिलमपिकथ्यतेतज्ज्ञैः ॥ १५ ॥ अथशीघ्रोमंदगतेरपिभागैकंसमुत्तरत्यग्रे ॥ तदे
सराफसंज्ञोमूसरिफःकथ्यतेत्वशुभः ॥ १६ ॥ यद्युभयदृष्टिरहितोयद्यन्यःशीघ्रगोंऽतरेभूत्वा ॥ पश्चात्तदन्यस्मैददातितेजः सनक्तसंज्ञः

स्यात् ॥ १७ ॥ उभयोर्लग्नेशकार्येशयोरितिज्ञेयम् ॥उदाहरणम् ॥ स्त्रीलाभस्यप्रश्नेकन्यालग्नेबुधःपतिःसिंहे ॥ मीनेचतत्पतिर्गुरुस्तत्रा
नयोर्नत्वस्तिदृष्टिस्तु ॥ १८ ॥ शीघ्रश्चंद्रोद्वाभ्यांदृष्टोबुधात्तन्महोनीत्वा ॥ जीवायददौतद्धत्परहस्ताद्योषितःप्राप्तिः ॥ १९ ॥ अथयदिमं
दोऽतस्थोद्वावप्यपश्यतिनिजोक्तदीप्तदृशा ॥ तेजोनीत्वाशीघ्राद्ददातिमंदायतद्यमया ॥ २० ॥ मंदायमंदगतये ॥ उभयेत्थशालयोगे
यदिचंद्रोप्यत्रमुथशिलविधायी ॥ तत्कंबूलंहिभवेदुत्तममध्याधमैर्भेदैः ॥ अयमर्थः॥यदिलग्नेशकार्येशयोरित्थशालयोगः तौचेत्स्वगृहेस्वोच्चे
वाचंद्रोपिस्वर्क्षोच्चगतस्तदोत्तमंकंबूलं॥यदाचंद्रःस्वर्क्षादौनतदोत्तममेव॥यदित्रैराशिकहद्दामुसल्लहाद्यधिकारवांस्तदामध्यमं ॥पंचाधिकारर
हितत्वमुभयोश्चतदाऽधमम् ॥ उभयोर्नीचारिराशिगतत्वेधमाधममितिविकल्पना ॥ एतेचेत्थशालादयोदृष्टिस्थानदीप्तांशकांतरेद्वादशां
तरेवाज्ञेयाः ॥ नकेवलमेकराश्यंशस्थानएवेतिज्ञेयम् ॥ एतच्चास्मत्कृतेताजिकरत्नेस्पष्टतरंप्रपंचितमेवावधारणीयं ॥ स्वगृहोच्चनवांशनि
रूपणंजातकावसरेनिरूपितं ॥ नवांशकएवमुसल्लहावाच्यः ॥ त्रैराशिकपदेनद्रेष्काणेशाः ॥ यथामेषादेःषट्त्रिंशद्द्रेष्काणानामधीश्वराज्ञे
याः ॥ प्रथमोभौमस्तस्मात्षष्ठश्चभौमांतं ॥ हद्दापदेनत्रिंशांशाउच्यंतेयथामेषेषडंगवसुशरबाणाः ६ । ६ । ८ । ५ । ५ । गुरुसित

ज्ञकुजमंदाः ॥ वृषभेवसुरसवसुशरशिखिनः ८ । ६ । ८ । ५ । ३ । शुक्रज्ञजीवमंदाराः ॥ मिथुनेषडंगशरनगषण्णां ६ । ६ । ५ । ७ । ६ । बुधशुक्रजीवकुजसौराः ॥ कर्केऽद्रिरसषडद्रिश्रुतिषु च ७ । ६ । ६ । ७ । ४। कुजशुक्रसौम्यगुरुमंदाः ॥सिंहेगबाणशैलांगांगाः ६ । ५ । ७ । ६ । ६ । देवेज्यशुक्रार्किबुधाराणां ॥ युवतौशैलाशाब्ध्यद्र्याक्षि ७ । १० । ४ । ७ । २ ।ज्ञसितजीवकुजशनीनां ॥रसाष्टाद्रिनगाक्षिभागाः ६ । ८ । ७।७। २। कोणबुधगुरुसिताराश्च॥ अलिन्यद्र्यंबुधिगजबाणांगाः ७ । ४ । ८ । ५ । ६ ।भूसुतशुक्रसौम्यगुरुमंदाः ॥ चापेरविबाणाब्धिशरवेदाः १२।५।४।५।४ देवगुरुसितज्ञकुजसूर्यजाः ॥ मकरेऽद्र्यद्रिनागाब्धिवेदाः ७।७।८।४।४। बुधेज्यदैत्यगुरुशनिभौमाः ॥ कुंभेऽद्र्यंगाद्रिबाणबाणाः ७।६।७।५।५। बुधसितेज्यकुजमंदाः ॥ मीनेर्काब्ध्यग्निनंदद्विः १२।४।३।९।२सितगुरुज्ञकुजसौराः ॥ इतिश्रीदैवज्ञानंतसुतश्रीदैवज्ञनीलकंठविरचितेश्रीनीलकंठ्यांप्रश्नतंत्रेतृतीयंसमाप्तम् ॥३॥ छ छ ॥समाप्तोऽयंग्रंथः छ छ

---

इदंपुस्तकंश्रीकृष्णदासतनयाभ्यांगङ्गाविष्णुखेमराजगुप्ताभ्यां "श्रीकल्पतरु"नाम्निमुद्रणालयेमुद्रयित्वाप्रकाशितम्॥आवृत्तिःप्रथमा १ ।

शके १८१० । संवत १९४५ सन १८८९

**ब्राह्मणोत्पत्ति**–मूल संस्कृत और हिंदिभाषाटीकासह इसमें सर्व प्रकारके ब्राह्मणोंकी उत्पत्ति सविस्तर है. ग्रन्थसंख्या १०,००० किं० ३॥ रु० ट० म० ८ आना.

**क्रीडाकौशल्य**–मूल संस्कृत और हिंदीभाषाटीकासह इस ग्रन्थमें सतरंज, गंजफा, चौपड, आदि अनेक प्रकारके खेलोंकीं रीती परमोत्तम वर्णित है. ऐसा अद्भुत ग्रन्थ अबतक कहीं नही छपा और प्रत्येक खेलकी न्यारी तसबीरभी है सब खेल ९३ प्रकारके हैं. किं० १॥ रु० ट० म० ४ आना.

**चर्य्याचन्द्रोदयभाषाटीकासहित**

इसग्रन्थमें दिनचर्य्या खाद्य लड्डू जलेबी पेडा बरफी घेवर पूपअपूप पूरी कचौरी भातदाल सागकढी शिखरणी आदिसम्पूर्ण पदार्थोंके बनानेकी विधि, तथा भोजन विधि सबपदार्थोंका गुणदोष इंद्रियोपक्रमणीयाध्याय रात्रिचर्य्या शय्यालक्षण शयनविधि स्त्रीपुरुषलक्षणादि अनेक विषयहैं यहग्रन्थ सम्पूर्ण सद्गृहस्थोंकें रखनेलायक प्रशंसाजोकीजाय थोडीहै देखनेसे इच्छा पूर्ण होगी मूल्य २॥रु०

**छंदोग्रंथाः**

| | | |
|---|---|---|
| श्रुतबोध वृत्तरत्नाकर .... .... | -।≡ | ≈– |
| छन्दश्चिन्ह .... .... .... | ≈= | ≈॥ |

**ज्योतिषग्रंथाः**

| | | |
|---|---|---|
| बृहत् मुहूर्तसिंधु .... | २ | -।- |
| बृहज्जातकसटीक .... | २ | -।- |
| ग्रहलाघव सटीक .... | -।।।- | ≈= |
| चमत्कारचिंतामणि* .... | -।= | ≈– |
| जातकाभरज्ण .... .... | -।।।- | ≈= |
| जातकालंकार .... .... | -।= | ≈– |
| लघुपाराशरीसटीक .... | -।- | ≈॥ |
| मुहूर्तगणपति .... .... | -।।।- | ≈= |
| मुहूर्तमार्तंड* .... .... | -।।।- | ≈= |
| मुहूर्तचिंतामणि प्रमिताक्षरा | १॥ | ≈≡ |
| मुहूर्तचिंतामणि पीयूषधारा टीका* | ३-।≡ | |
| बालबोध .... | ≈= | ≈॥ |
| ताजिकनीलकंठीसटीकतंत्रत्रयात्मक | १॥ | |
| शीघ्रबोधभाषाटीका .... | -।= | ≈– |
| षट्पंचाशिकासटीक .... | ≈≡ | ≈॥ |
| भुवनदीपक सटीक .... | -।- | ≈॥ |
| जैमिनीसूत्रसटीक .... | -।।- | ≈– |
| रमलनवरत्न .... | -।।- | ≈– |
| सवार्थचिंतामणि .... | -।।।- | ≈= |
| लघुजातकसटीक .... | -।= | ≈– |
| सामुद्रिकभाषाटीका .... | -।- | ≈॥ |
| मानसागरीपद्धति* .... | १। | ≈= |
| यवनजातक .... | ≈= | ≈॥ |
| लीलावती जिल्द .... | -।।- | ≈= |

और अनेक संस्कृत और भाषाके पुस्तक हमारे यहां विक्रयार्थ छपके तयार है. जिसको मंगाना होय–वह हमकू लिखे आधाआनेका टिकिट भेजनेसे सूची पत्र भेजा जायगा पत्र नाटपेट लेवेंगे नहीं.

पत्ताः—गंगाविष्णु श्रीकृष्णदास "श्री वेंकटेश्वर" छापखाना मुंबई.

